परिशिष्टम् ( १ )

## श्रीराजानकरुय्यकप्रणीता

# सहृदयलीला

### अथ गुणोल्लेखः ॥ १ ॥

श्रीमतामुत्कर्षपरिज्ञानाद् वैदग्ध्येन सहृदयत्वान्नागरकतासिद्धिः। युवत्यादीनामुत्कर्षो देहे गुणालंकारजीवितपरिकरेभ्यः। तत्र शोभाविधायिनो धर्मा गुणाः।

रूपं वर्णः प्रभा राग आभिजात्यं विलासिता।
लावण्यं लक्षणं छाया सौभाग्यं चेत्यमी गुणाः ॥

अवयवानां रेखास्पाष्टयं रूपम्। गौरतादिधर्मविशेषो वर्णः। काचकच्यरूपा रविवत्कान्तिः प्रभा। नैसर्गिकस्मेरत्वमुखप्रसादादिः सर्वेषामेव चक्षुर्बन्धको धर्मो रागः। कुसुमधर्मा मार्दवादिर्लालनादिरूपः स्पर्शविशेषः पेशलताख्य आभिजात्यम्। अङ्गोपाङ्गानां यौवनोद्भेदी मन्मथवासनाप्रयुक्तः कटाक्षादिवद् विभ्रमाख्यश्चेष्टाविशेषो विलासिता। तरङ्गिद्रवस्वभावाप्यायिनेत्रपेयव्यापिस्निग्धमधुर इव पीतिमोत्कर्षैकसार इव पूर्णेन्दुवदाह्लादको धर्मः संस्थानसुषिमव्यङ्ग्यो लावण्यम्। अङ्गोपाङ्गानामसाधारणशोभाप्राशस्त्यहेतुरौचित्यात्मा स्मयो धर्मो लक्षणम्। तस्य युक्तप्रमाणता-दोष(? षा)स्पर्श-स्निग्धवक्रनियतलोमा-ङ्गसुश्लिष्टसंधानताऽऽनाहपरिणाहौचित्य-चक्रपद्मादिलेखाङ्कनायोगेभ्यः प्रसिद्धाङ्गपूर्णतादोषवैकल्य-धर्म(?)सौन्दर्य-प्रमाणौचित्य-लोका(? क)प्रसिद्धविशिष्टाङ्गयोगाख्याः क्रमेण षड् भेदाः। अग्राम्यतया वक्रिमत्वख्यापिनी ताम्बूलपरिधाननृत्तभणितिगमनादिस्थानकेषु सूक्ष्मा भङ्गिश्छाया। स्फुरल्लक्ष्म्युपभोगपरिमलादिगम्योऽन्तःसारो रञ्जकतया वशीकर्ता सहृदयसंवेद्यधर्मभेदश्च सौभाग्यम्। तत्राद्ये स्मरमदपुलकादयो भेदाः। अन्त्ये तु भणित-रूपपरिभोगाऽधरास्वाद-सौरभादिभिर्युगपद्रसवत्त्वात् पञ्चेन्द्रियसुखलाभः ॥

इति राजानकश्रीरुय्यकविरचितायां सहृदयलीलायां गुणोल्लेखः प्रथमः ॥

## अथ अलङ्कारोल्लेखः ॥ २ ॥

रत्नं हेमांशुके माल्यं मण्डनद्रव्ययोजने ।
प्रकीर्णं चेत्यलंकाराः सप्तैवैते मया मताः ॥

तत्र वज्रमुक्तापद्मरागमरकतेन्द्रनीलवैदूर्यपुष्परागकर्केतनं[1]पुलकरुधिराक्षभीष्मस्फटिकप्रवालरूपाणि त्रयोदश रत्नानि । हेम नवधा । जाम्बूनद-शातकौम्भ-हाटक-वैणव-शृङ्गीशुक्तिज-जातरूप-रसविद्धाऽऽकरोद्गतभेदात् । चतुर्धा रत्नहेममयः । आवेध्य-निबन्धनीय-प्रक्षेप्या-रोप्यभेदात् । तत्र ताडीकुण्डलश्रवणवालिकादिरावेध्यः । अङ्गद-श्रोणीसूत्र-मूर्धमणि-शिखादृढिकादिर्निबन्धनीयः । ऊर्मिकाकटकमञ्जीरसदृशः प्रक्षेप्यः । प्रालम्ब-मालिका-हार-नक्षत्रमाला-प्रभृतिरारोप्यः । चतुर्धांशुकमयः । त्वक्फलक्रिमिरोमजत्वात्क्रमेण क्षौमकार्पासकौशेयराङ्कवादिभेदात् । पुनस्त्रिधा । निबन्धनीयप्रक्षेप्यारोप्यवैचित्र्यात् । तत्र निबन्धनीयः शिरःशाटकजघनवसनादिः । प्रक्षेप्यः कञ्चलिकादिः । आरोप्य उत्तरीयपटादिः । सर्वस्यास्यानेकविधत्वं वर्णविच्छित्तिनानात्वात् । ग्रथिताग्रथितवशाद् द्विविधः सन्नष्टधा माल्यमयः । वेष्टितविततसंघात्यग्रन्थिमदवलम्बमुक्तकमञ्जरीस्तबकलक्षणमाल्यभेदेन । तत्रोद्वर्तितं वेष्टितम् । पार्श्वतो विस्तारितं विततम् । बहुभिः पुष्पैः समूहेन रचितं संघात्यम् । अन्तरान्तरा विषमं ग्रन्थिमत् । स्पष्टोम्भितमवलम्बम् । केवलं मुक्तकः । अनेकपुष्पमयी लता मञ्जरी । कुसुमगुलुच्छं स्तबकः । तस्यावेध्यादयोऽपि चत्वारो भेदाः । कस्तूरीकुङ्कुमचन्दनकर्पूरागुरुकुलकदन्तसमपटवाससहकारतैलताम्बूलालक्तकाञ्जनगोरोचनादिनिर्वृत्तो मण्डनद्रव्यमयः । भ्रूघटनालकरचनाधम्मिल्लबन्धादिर्योजनामयः । द्विधा प्रकीर्णमयः । जन्यनिवेश्यभेदेन । श्रमजलमधुमदादिर्जन्यः । दूर्वाशोकपल्लवयवाङ्कुररजतत्रपुशङ्खतालदलदन्तपत्रिकामृणालवलयकरक्रीडनकादिर्निवेश्यः । 'एतत्समवायो वेषः । स च देशकालप्रकृत्यवस्थासात्म्येन । एतेषां विच्छित्त्या यथास्थाननिवेशनपरभागलाभाद् रामणीयकवृद्धिः ॥

इति राजानकश्रीरुय्यकविरचितायां सहृदयलीलायामलंकारोल्लेखो द्वितीयः ॥

---

१. कर्केतनं— स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः ।
त्रास-व्रण-व्याधि-विवर्जिताश्च कर्केतनास्ते परमं पवित्राः ॥
वर्णेन तद् रुधिरसोममधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति ।
नीलं पुनः खलसितं परुषं विभिन्नं व्याध्यादिदोषकरणेन न तद् विभाति ॥

पुलकम्— गन्धर्ववह्निकदलीसदृशावभासाः ॥ गुञ्जाञ्जनक्षौद्रमृणालवर्णाः ॥
शङ्खाब्जभृङ्गार्कविचित्रभङ्गा एते प्रशस्ताः पुलकाः प्रसूताः ॥

रुधिराक्षम्—तत्रेन्द्रगोपकलितं शुकवक्त्रवर्णं संस्थानतः प्रकटपीलुसमानमात्रम् ।
नानाप्रकारविहितं रुधिराख्यरत्नम् ॥—शब्दकल्पद्रुमे गरुडपुराणवचनानि ।

भीष्मम्— शुक्लवर्णः प्रस्तरविशेषः—शब्दार्थचिन्तामणिः

## अथ जीवितोल्लेखः ॥ ३ ॥

शोभाया अनुप्राणकं यौवनाख्यं जीवितम् । बाल्यानन्तरं गात्राणां वैपुल्यसौष्ठव-विभक्तताविधायी स्फुटितदाडिमोपमः स्मरवसतिरवस्थाभेदो यौवनम् । तस्य वयःसंधिरा-रम्भः । मध्यं तु प्रौढिकालः । प्रथमे धम्मिल्लरचनालकभङ्गनीवीनहनदन्तपरिकर्मपरिष्क-रणदर्पणेक्षणपुष्पोच्चयमाल्योम्भनजलक्रीडाद्यूताश्लीलच्छेकभणित्यनिमित्तलज्जानुभावश्रृङ्गार-शिक्षादय आवर्तमानाश्चेष्टाः । अन्त्ये तु श्रृङ्गारानुभावतारतम्यं श्रेयः ॥

इति राजानकश्रीरुय्यकविरचितायां सहृदयलीलायां जीवितोल्लेखस्तृतीयः ॥

---

## अथ परिकरोल्लेखः ॥ ४ ॥

शोभाया आरादुपकारकत्वाद्व्यञ्जकः परिकरः । तस्य चेतनाचेतनयोः स्थाणुचलयोः प्रत्येकं श्लिष्टसंनिहितमात्ररूपत्वेनाष्टविधत्वम् । उत्सङ्गोपासीनकान्तहयपरिवारवातायन-वितान-नौ-छत्रादीनि दर्शनानि । तानि द्विधा व्यस्तसमस्तभेदात् । एवं शोभासमुत्पादक-समुद्दीपकानुप्राणकव्यञ्जकाः क्रमाद् गुणालंकारजीवितपरिकराः । एवं परस्परोपकारकत्वा-दितरेतरानुग्राहकत्वं सिद्धम् ॥

इति राजानकश्रीरुय्यकविरचितायां सहृदयलीलायां परिकरोल्लेखश्चतुर्थः[१] ॥

---

**समाप्तेयं सहृदयलीला**



---

१. (क) पिशेलसंपादितायाः सहृदयलीलायाः पुष्पिका सर्वस्वस्य भूमिकाया ७ पृष्ठे द्रष्टव्या। अस्माकमाधारो निर्णयसागरीयः कश्मीरदेशीयपुस्तकद्वयाश्रितः पाठः । तत्रापि पाठान्तरे साऽस्त्येव [ काव्यमाला-५ ]।

(ख) चतुर्णामप्येतेषां गुणालङ्कारजीवितपरिकराणां लक्षणान्तराणि रसार्णवसुधाकर-भावप्रकाशनादिषु निबन्धेषु, निदर्शनानि च कुमारसंभवकादम्बरीनैषधादिषु श्रृङ्गार-प्रबन्धेषु सुलभानि ।

## परिशिष्टम् ( २ )

# अलङ्कारसर्वस्वोदाहृतश्लोकानुक्रमणिका

# विमर्शिनीटीकोदाहृतश्लोकानुक्रमणिका

## हमारे कतिपय नवीन प्रकाशन

| | |
|---|---|
| शब्दस्तोममहानिधिः—तारानाथ भट्टाचार्य विरचित | ४५—०० |
| समयमातृका—डॉ० रमाशंकर त्रिपाठीकृत हिन्दी व्याख्या सहित | ४—०० |
| सूक्तिमञ्जरी—आचार्य बलदेव उपाध्याय | ८—०० |
| त्रिपुरारहस्यम्-ज्ञानखण्डम्। 'ज्ञानप्रभा' हिन्दी व्याख्या सहित | १३—०० |
| हिन्दी ब्रह्मसूत्रशाङ्करभाष्य ( चतुःसूत्री ) आचार्य विश्वेश्वर | ५—०० |
| कामकुञ्जलता—पण्डितराज दुण्ढिराज शास्त्री सम्पादित | २०—०० |
| चन्द्रकला नाटिका-विश्वनाथकविराजप्रणीत। 'प्रभावती' हिन्दीव्याख्या | ६—५० |
| हिन्दी वक्रोक्तिजीवित। व्याख्याकार-श्री राधेश्याम मिश्र | १५—०० |
| राजमार्तण्डः—हिन्दी व्याख्या सहित | २—५० |
| हिन्दी वैशेषिकदर्शन—( प्रशस्तपादभाष्य सहित ) | १५—०० |
| व्याकरणमहाभाष्यम्—सप्रदीप हिन्दीव्याख्या १-५ आह्निक | १०—०० |
| व्याकरण शास्त्र का संक्षिप्त इतिहास—श्री रमाकान्त मिश्र | ४—०० |
| शृङ्गाररस का शास्त्रीय विवेचन—डॉ० इन्द्रपाल सिंह | १०—०० |
| साहित्य शास्त्रसार—श्री हंसराज अग्रवाल | ४—५० |
| भारतीय काव्यशास्त्र के प्रतिनिधिसिद्धान्त—श्री राजवंशसहाय | १५—०० |
| महाकवि शूद्रक-(शूद्रक और मृच्छकटिक) डॉ० रमाशङ्कर तिवारी | १२—५० |
| औचित्य सम्प्रदाय का हिन्दी-काव्य शास्त्र पर प्रभाव—डॉ० चन्द्रहंस पाठक | २५—०० |
| भारतीय इतिहास के स्रोत सिक्के। ई० जे० रैपसन। अनुवादक-डॉ० रामकुमार राय | १२—०० |
| मूल संस्कृत उद्धरण-प्रो० जे मूइर। (हिन्दी रूपान्तर) १-५ भाग | १२५—०० |
| लौकिक संस्कृत साहित्य का संक्षिप्त इतिहास—डॉ० गौरीनाथ शास्त्री। अनुवादक-डॉ० रामकुमार राय | ९—०० |
| विष्णुपुराण का भारत—डॉ० सर्वानन्द पाठक | २०—०० |
| विद्यापरिणयनम्—आनन्दराय मखि विरचित। 'प्रकाश' हिन्दी टीका | ४—५० |
| वैदिक योगसूत्र—श्री हरिशंकर जोशी | २०—०० |
| शुक्रनीतिः—विद्योतिनी हिन्दी व्याख्या भू० पण्डितराज राजेश्वर शास्त्री | १२—५० |
| स्वतन्त्र कलाशास्त्र—(प्र० भाग भारतीय) डॉ० कान्तिचन्द्र पाण्डेय | ३५—०० |
| हिन्दी सहृदयानन्द—कृष्णानन्द प्रणीत। व्याख्याकार-वाचस्पति द्वि० | ५—५० |
| धर्मसिन्धुः—'धर्मदीपिका' हिन्दी टीका 'सुधा' टिप्पणी सहित। | २५—०० |
| याज्ञवल्क्यस्मृतिः—'मिताक्षरा' तथा 'प्रकाश' संस्कृत हिन्दी टीका | २०—०० |

प्राप्तिस्थानम्—चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१